# विश्वलोचनचक्रपूजा

ॐ नमो भगवते हनुमते रुद्रावताराय महाबलाय आञ्जनेयाय

वायुपुत्राय कोसलेन्द्रानुचराय साम्प्रतं स्वात्मानं दर्शय सत्यं वद

वद स्वाहा हां हां ॐ ॥ इति मन्त्रः ।

ॐ अस्य श्रीविश्वलोचनचक्रराजहनुमन्महामन्त्रस्य

अगस्त्यऋषिः अतिजगतीच्छन्दः । कोसलेन्द्रानुचरो महेश्वरो

हनुमान्देवता । हां बीजम् । स्वाहा शक्तिः । नमः कीलकम् ।

स्वात्मदर्शने विनियोगः ।

ऋष्यादिन्यासः ॥

ॐ अगस्त्यऋषये नमः । शिरसि ।

ॐ अतिजगतीच्छन्दसे नमः । मुखे ।

ॐ कोसलेन्द्रानुचराय महेश्वराय हनुमते देवतायै नमः । हृदि ।

ॐ हां बीजाय नमः गुह्ये ।

ॐ स्वाहा शक्तये नमः । पादयोः ।

ॐ नमः कीलकाय नमः । नाभौ ।

ॐ स्वात्मदर्शनविनियोगाय नमः सर्वाङ्गे ॥

हृदयादिषडङ्गन्यासः । ॐ नमो भगवते हां हनुमते हृदयाय नमः ।

ॐ रुद्रावताराय महाबलाय हीं हनुमते शिरसे स्वाहा ।

ॐ आञ्जनेयाय वायुपुत्राय हूं हनुमते शिखायै वषट् ।

ॐ कोसलेन्द्रानुचराय हैं हनुमते कवचाय हुम् ।

ॐ साम्प्रतं स्वात्मानं दर्शय दर्शय हौं हनुमते नेत्रत्रयाय वौषट् ।

ॐ सत्यं वद वद स्वाहा हां हां ॐ हः हनुमते अस्त्राय फट् ।

ध्यानम् ।

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।

वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

पीठदेवताप्रतिष्ठा ।

ॐ मं मण्डूकादिपरतत्त्वपीठदेवताभ्यो नमः ।

ॐ विमलायै नमः । ॐ ज्ञानायै नमः । ॐ क्रियायै नमः ।

ॐ योगायै नमः । ॐ प्रह्वायै नमः । ॐ सत्यायै नमः ।

ॐ ईशानायै नमः । मध्ये । ॐ अनुग्रहायै नमः ।

ॐ नमो भगवते रुद्राय सर्वभूतात्मने हनुमते

सर्वात्मसंयोगपद्मपीठात्मने नमः ॥ इति हनुमन्तं पीठे निधाय ।

ॐ सविन्मय परो देव परामृतरसप्रिय ।

विश्वलोचनचक्रपूजा -

अनुज्ञां हनुमन् देहि परिवारार्चनाय मे ॥ इति पुष्पाञ्जलिं दद्यात् ।

आवरणपूजा ॥ -

(मध्ये) ॐ रां रामाय नमः । रामश्रीपादुकां पूजयामि तर्पयामि नमः ।

(पूर्वे) ॐ हां हनुमते नमः हनुमच्छ्रीपादुकां पूजयामि तर्पयामि नमः ।

(ईशान्ये) ॐ सं सुग्रीवाय नमः सुग्रीवश्रीपादुकां पूजयामि तर्पयामि नमः ।

(आग्नेय्ये) ॐ लं लक्ष्मणाय नमः लक्ष्मणश्रीपादुकां पूजयामि तर्पयामि नमः
।

ॐ अभीष्टसिद्धिं में देहि शरणागतवत्सल ।

भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

ॐ अणिमायै नमः । अणिमाश्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ महिमायै नमः । महिमाश्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ गरिमायै नमः । गरिमाश्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ लघिमायै नमः । लघिमाश्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ प्राप्त्यै नमः । प्राप्तिश्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ प्राकाम्यायै नमः । प्राकाम्यश्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ ईशितायै नमः । ईशिताश्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ वशितायै नमः । वशिताश्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।

भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥

ॐ विजयध्वजाय नमः । ॐ सिंहध्वजाय नमः । ॐ हलध्वजाय नमः ।

ॐ सुषेणाय नमः । ॐ भद्रसेनाय नमः । ॐ जयसेनाय नमः ।

ॐ विजयसेनाय नमः । ॐ गोमुखाय नमः । ॐ दधिमुखाय नमः ।

ॐ जडलाङ्गूलाय नमः । ॐ महीलाङ्गूलाय नमः । ॐ कालाय नमः ।

ॐ महाकालाय नमः । ॐ वज्रसाराय नमः । ॐ महासाराय नमः ।

ॐ मकरध्वजाय नमः ।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।

भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥

(इतः परं वृत्ते मातृकाक्षराणि द्वारेषु दिक्पतितदायुधपूजा च इत्यावरणपूजां कृत्वा धूपादिना सम्पूज्य स्तोत्रादिना हनूमन्तं स्तुत्वा मालां संस्कृतामादाय हृदये धारयन् मौनी एकाग्रचित्तः भूत्वा मूलमन्त्रं जपति ॥ )

अस्य मन्त्रस्य पुरश्चरणमेकलक्षजपः । बदलघृतैः दशांशतो होमः ।

तद्दशांशेन त्रिमधुभिः (मधुघृतशर्कराभिः) तर्पणम् ।

तद्दशांशेन गन्धवारिभिः मार्जनम् । तद्दशांशेन मोदकैः पायसेन वा ब्राह्मणभोजनम् ।

इति मन्त्रसिद्धिः ॥

दीपपूजा-शुक्र-शनि-भौमवासरे घृतदीपं स्वर्णादिपात्रे सुगन्धवर्त्या संयोज्य ॐ हनुमद्दीपाय नमः इति दीपं सम्पूज्य प्रज्वाल्य

कज्जलं पाययेत् ।

ॐ हनुमदञ्जनाय नमः । इति कज्जलं सम्पूज्य ततः विशाले शोभने पात्रे द्व्यङ्गुलं वर्तुलं तदुपरि चतुरङ्गुलं चक्रवालं अलक्तकेन विधाय,

तत्राद्यमण्डले सुगन्धेन स्नेहेन कज्जलं संयोज्य तदुपरि मण्डलं कुङ्कुमेन संलिप्य भूर्जपत्रे मूलमन्त्रं लिखित्वा, मन्त्रान्तरे च पत्रान्तरयोः

स्थाननिरूपकतगरादीन् अगरुकर्पूरकल्केन निरूपयेत् तदग्रे यन्त्रं लिखित्वा तेषां मूलमन्त्रेण षोडशोपचारैः सम्पूजयेत् ॥

ॐ जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो हनुमान्कार्यसाधकः ॥ इति वा मन्त्रेण सम्पूजनम् ॥

ततः स्नातं शुद्धं अखण्डितब्रह्मचर्यं अदूषितं वटुं आनीय तत्र संस्थाप्य तस्य मन्त्रं श्रावयेत् पूजां च कारयेत् । ततः गोघृतेन तैलेन वा दीपं प्रज्वाल्य शुचिः प्रयतः साधकः मौनेन अष्टोत्तरशतवारं मूलमन्त्रं जपेत् ।

ततो वटुं समुत्त्थाप्य दीपकेन स्पृष्टं कृत्वा मेचकमण्डले नेत्रं दत्वा दीपं पश्येत् । तत्र मन्त्रत्रयं जपेत् । हुं इति उच्चरन् वटुं पृच्छेत् - किं पश्यसि? \'\' इति । एवं पुनः पुनः पृच्छेत् ॥

वटुः पूर्वं तेजोमण्डलं पश्यति । तत उत्तरं; तत उपवेशनम् । ततः प्रभाम् । ततः समयदेवताः । ततः सिंहासनम् । अनन्तरं अनुक्रमं हनूमन्तं, सुग्रीवं, लक्ष्मणं, श्रीरामं च पश्यति । ततः स्वचिन्तितं कार्यं यजमानः वटवे श्रावयेत् । वटुः कृताञ्जलिर्भूत्वा ``भगवन् हनुमन् मया निवेदितं कार्यं कृपया वदतु भवान् ।\'\' इति ब्रूयात् । तद्भाषितं श्रुत्वा यजमानः गुरवे निवेदयेत् । तेन सिद्ध्यसिद्धी जानीयात् ।

यदा तु वटुः किमपि न पश्यति, अन्यथा वा पश्यति गिरि-समुद्रयक्ष-राक्षस-नर-नारी-पशु-पक्षिगणं पश्यति, तदपि तदा शुभाशुभं तद्रूपेण जानीयात् । यद्यनिष्टं पश्यति तदा यन्त्रं वटुशिरसि निधाय मन्त्रं जप्त्वा पुनः ``किं पश्यसि\'\' इति तं पृच्छेत् । ततः इष्टं पश्यति । अनन्तरं कार्यं पृच्छेत् । चोर-जार-नारी-द्यूतादीनां प्रश्नं न कुर्यात् ॥

शान्त्यर्थं श्वेतवस्त्रमाल्यनैवेद्योपचारैः तुष्टिं कुर्यात् । इतरे रक्तवस्त्राणि धारयेयुः । कार्यसिद्धिर्भवति । प्रश्नावेला अर्धरात्रिरेव ॥

।। इत्यगस्त्यसंहितायां विश्वलोचनचक्रपूजाविधानं समाप्तम् ॥